तद्वत् कामा यं प्रविशन्ति सर्वे
स शान्तिमाप्नोति न कामकामी ॥ ७० ॥

—अ० २

इति **श्रीमद्ध्यानगीतायां** योगशास्त्रे श्रीकृष्णार्जुन-संवादे **सद्गुणसमुच्चयो** नाम षष्ठोऽध्यायः ।

### सप्तमोऽध्यायः

# कर्मयोगः

## १. नैष्कर्म्यसिद्धिः

### फलसङ्गत्यागः

फलाची आशा टाकून व समचित्तानें संगाचा त्याग करून सर्व कर्में केलीं पाहिजेत. (श्लो० २)

(ಫಲಾಶೆಯನ್ನು ತೊರೆದು ಹಾಗೂ ಸಮಚಿತ್ತದಿಂದ ಸಂಗವನ್ನು ತ್ಯಜಿಸಿ ಎಲ್ಲ ಕರ್ಮಗಳನ್ನು ಮಾಡಬೇಕು.)

श्रीभगवानुवाच--

कर्मण्येवाधिकारस्ते मा फलेषु कदाचन।
मा कर्मफलहेतुर्भूर्मा ते सङ्गोऽस्त्वकर्मणि ॥ ४७ ॥

योगस्थः कुरु कर्माणि सङ्गं त्यक्त्वा धनञ्जय।
सिद्ध्यसिद्ध्योः समो भूत्वा समत्वं योग उच्यते ॥ ४८ ॥

—अ० २

## सिद्धचसिद्धिसमत्वम्

जो यदृच्छालाभानें संतुष्ट राहतो व सिद्धि व असिद्धीस सम लेखितो, त्यास कर्म बाधूं शकत नाहीं. (श्लो० १)

(ಯದೃಚ್ಛಾಲಾಭದಿಂದ ಸಂತುಷ್ಟನಾಗಿರುವ ಮತ್ತು ಸಿದ್ಧಿ ಅಸಿದ್ಧಿಗಳನ್ನು ಸಮನಾಗಿ ಕಾಣುವವನನ್ನು ಕರ್ಮವು ಬಾಧಿಸಲಾರದು.)

यदृच्छालाभसन्तुष्टो द्वन्द्वातीतो विमत्सरः।
समः सिद्धावसिद्धौ च कृत्वापि न निबध्यते॥ २२॥
—अ० ४

## पावनकर्माणि

पावन कर्मे करीत असतांनाहि संगफलांचा त्याग केला पाहिजे. (श्लो० २)

(ಪಾವನ ಕರ್ಮಗಳನ್ನು ಮಾಡುತ್ತಿರುವಾಗಲೂ ಸಂಗಫಲಗಳನ್ನು ತ್ಯಜಿಸಬೇಕು.)

यज्ञदानतपःकर्म न त्याज्यं कार्यमेव तत्।
यज्ञो दानं तपश्चैव पावनानि मनीषिणाम्॥ ५॥

एतान्यपि तु कर्माणि सङ्गं त्यक्त्वा फलानि च।
कर्तव्यानीति मे पार्थ निश्चितं मतमुत्तमम्॥ ६॥

—अ० १८

**शारीरं कर्म (अपवादत्वेन)**

निराशेनें केवळ शारीर कर्में केलीं असता कर्माचें किल्बिष लागणार नाहीं. (श्लो० १)

(ಆಶೆಯನ್ನು ತೊರೆದು ಕೇವಲ ಶಾರೀರಿಕ ಕರ್ಮಗಳನ್ನು ಮಾಡಿದರೆ ಕರ್ಮದ ಕಿಲ್ಬಿಷವು ಸೋಂಕಲಾರದು.)

निराशीर्यतचित्तात्मा त्यक्तसर्वपरिग्रहः।
शारीरं केवलं कर्म कुर्वन्नाप्नोति किल्बिषम्॥ २१॥

—अ० ४

देहांत असे पर्यंत पूर्णपणें कर्में सोडणें शक्य नाहीं. (श्लो० १)

(ದೇಹದಲ್ಲಿ ಇರುವವರೆಗೆ ಕರ್ಮಗಳನ್ನು ಪೂರ್ತಿಯಾ
ಬಿಡಲು ಸಾಧ್ಯವಿಲ್ಲ.)

न हि देहभृता शक्यं त्यक्तुं कर्माण्यशेषतः ।
यस्तु कर्मफलत्यागी स त्यागीत्यभिधीयते ॥ ११ ॥
—अ० १८

### लोकसङ्ग्रहः

जनकाप्रमाणें कर्मयोग आचरल्यानें लोकसंग्रहहि होऊं शकतो. (श्लो० २)

(ಜನಕನಂತೆ ಕರ್ಮಯೋಗವನ್ನಾಚರಿಸಿದರೆ ಲೋಕಸಂಗ್ರಹ
ವಾಗುವದೂ ಶಕ್ಯವಿದೆ.)

कर्मणैव हि संसिद्धिमास्थिता जनकादयः ।
लोकसङ्ग्रहमेवापि सम्पश्यन् कर्तुमर्हसि ॥ २० ॥

यद्यदाचरति श्रेष्ठस्तत्तदेवेतरो जनः ।
स यत् प्रमाणं कुरुते लोकस्तदनुवर्तते ॥ २१ ॥
—अ० ३

**नैष्कर्म्यसिद्धिः**

संन्यासानें नैष्कर्म्यसिद्धीची प्राप्ति. (श्लो० १)

(ಸನ್ಯಾಸದಿಂದ ನೈಷ್ಕರ್ಮ್ಯಸಿದ್ಧಿಯು ಪ್ರಾಪ್ತಿಯು.)

असक्तबुद्धिः सर्वत्र जितात्मा विगतस्पृहः।
नैष्कर्म्यसिद्धिं परमां संन्यासेनाधिगच्छति॥ ४९॥

—अ० १८

## २. वेदानां त्रैगुण्यविषयत्वम्

भोगैश्वर्यावर आसक्त असणाऱ्या वेदरतांची बुद्धि समाधीमध्यें स्थिर होत नाहीं. (श्लो० ३)

(ಭೋಗೈಶ್ವರ್ಯಗಳಲ್ಲಿ ಆಸಕ್ತರಾಗಿರುವ ವೇದರತರ ಬುದ್ಧಿಯು ಸಮಾಧಿಯಲ್ಲಿ ಸ್ಥಿರವಾಗುವದಿಲ್ಲ.)

यामिमां पुष्पितां वाचं प्रवदन्त्यविपश्चितः।
वेदवादरताः पार्थ नान्यदस्तीति वादिनः॥ ४२॥

कामात्मानः स्वर्गपरा जन्मकर्मफलप्रदाम्।
क्रियाविशेषवहुलां भोगैश्वर्यगतिं प्रति॥ ४३॥

भोगैश्वर्यप्रसक्तानां तयापहृतचेतसाम् ।
व्यवसायात्मिका बुद्धिः समाधौ न विधीयते ॥ ४४ ॥
—अ० २

वेद त्रिगुणांत सांपडत असल्यानें, निस्त्रैगुण्याची अपेक्षा करणाऱ्यानें योगक्षेमाची आशा सोडून आत्म्यावर चित्त ठेविलें पाहिजे. (श्लो० १)

(ವೇದಗಳು ತ್ರಿಗುಣಗಳಲ್ಲಿ ಸಿಲುಕಿರುವದರಿಂದ, ನಿಸ್ತ್ರೈಗುಣ್ಯವನ್ನು ಬಯಸುವವನು ಯೋಗಕ್ಷೇಮದ ಆಶೆಯನ್ನು ತೊರೆದು ಆತ್ಮನಲ್ಲಿ ಚಿತ್ತವನ್ನಿಡಬೇಕು.)

त्रैगुण्यविषया वेदा निस्त्रैगुण्यो भवार्जुन ।
निर्द्वन्द्वो नित्यसत्त्वस्थो निर्योगक्षेम आत्मवान् ॥ ४५ ॥
—अ० २

वेद हा तडाग असून आत्मा हा त्यास व्यापणाऱ्या सागराप्रमाणें आहे. (श्लो० १)

(ವೇದವು ಕೆರೆಯಾಗಿದ್ದು ಆತ್ಮನು ಅದನ್ನು ವ್ಯಾಪಿಸಿರುವ ಸಾಗರದಂತೆ ಇರುವನು.)

यावानर्थ उदपाने सर्वतः सम्प्लुतोदके।
तावान् सर्वेषु वेदेषु ब्राह्मणस्य विजानतः॥ ४६॥
—अ० २

### ३. यज्ञचक्रप्रवर्तनम्

यज्ञास कर्माचें बंधन नाहीं. (श्लो० १)
(ಯಜ್ಞಕ್ಕೆ ಕರ್ಮಬಂಧನವಿಲ್ಲ.)

यज्ञार्थात् कर्मणोऽन्यत्र लोकोऽयं कर्मबन्धनः।
तदर्थं कर्म कौन्तेय मुक्तसङ्गः समाचर॥ ९॥
—अ० ३

यज्ञ कामधेनु असला तरी ईश्वरानें दिलेलें ईश्वरास अर्पण करून आपण अवशिष्टाचाच स्वीकार केला पाहिजे. (श्लो० ४)
(ಯಜ್ಞವು ಕಾಮಧೇನುವಾಗಿದ್ದರೂ ಕೂಡ ಈಶ್ವರನು ಕೊಟ್ಟದ್ದನ್ನು ಈಶ್ವರನಿಗೆ ಅರ್ಪಿಸಿ ಅವಶಿಷ್ಟವನ್ನೇ ಸ್ವೀಕರಿಸಬೇಕು.)

सहयज्ञाः प्रजाः सृष्ट्वा पुरोवाच प्रजापतिः।
अनेन प्रसविष्यध्वमेष वोऽस्त्विष्टकामधुक्॥ १०॥

देवान् भावयतानेन ते देवा भावयन्तु वः।
परस्परं भावयन्तः श्रेयः परमवाप्स्यथ॥ ११॥

इष्टान् भोगान् हि वो देवा दास्यन्ते यज्ञभाविताः।
तैर्दत्तानप्रदायैभ्यो यो भुङ्क्ते स्तेन एव सः॥ १२॥

यज्ञशिष्टाशिनः सन्तो मुच्यन्ते सर्वकिल्बिषैः।
भुञ्जते ते त्वघं पापा ये पचन्त्यात्मकारणात्॥ १३॥

—अ० ३

यज्ञशेष अमृत चाखावयास मिळणें हीच ब्रह्मप्राप्ति होय. (श्लो० १)

(ಯಜ್ಞದ ಅವಶೇಷವಾದ ಅಮೃತವು ಸೇವಿಸುವದಕ್ಕೆ ದೊರಕುವದೇ ಬ್ರಹ್ಮಪ್ರಾಪ್ತಿಯು.)

यज्ञशिष्टामृतभुजो यान्ति ब्रह्म सनातनम्।
नायं लोकोऽस्त्ययज्ञस्य कुतोऽन्यः कुरुसत्तम॥ ३१॥

—अ० ४

अनादिकालापासून चालत आलेलें हें चक्र जो पुढें चालविणार नाहीं तो पापी होय. (श्लो० १)

(ಅನಾದಿಕಾಲದಿಂದ ನಡೆದು ಬಂದ ಈ ಚಕ್ರವನ್ನು ಮುಂದೆ ನಡೆಸದಿರುವವನು ಪಾಪಿಯು.)

एवं प्रवर्तितं चक्रं नानुवर्तयतीह यः।
अघायुरिन्द्रियारामो मोघं पार्थ स जीवति ॥ १६ ॥

—अ० ३

यज्ञाची पंचपुटी ही सर्व ब्रह्मरूप असल्यानें यज्ञ कर्मबंधनातीत आहे. (श्लो० २)

(ಯಜ್ಞದ ಪಂಚಪುಟಿಯೆಲ್ಲವೂ ಬ್ರಹ್ಮರೂಪವಿರುವದರಿಂದ ಯಜ್ಞವು ಕರ್ಮಬಂಧನಕ್ಕೆ ಒಳಗಾಗುವದಿಲ್ಲ.)

गतसङ्गस्य मुक्तस्य ज्ञानावस्थितचेतसः।
यज्ञायाचरतः कर्म समग्रं प्रविलीयते ॥ २३ ॥

ब्रह्मार्पणं ब्रह्म हविर्ब्रह्माग्नौ ब्रह्मणा हुतम्।
ब्रह्मैव तेन गन्तव्यं ब्रह्मकर्मसमाधिना ॥ २४ ॥

—अ० ४

## ४. ईश्वरप्राप्तिः

संगाचा त्याग करून कर्में करीत गेल्यानें ईश्वराची सुद्धां प्राप्ति होते. (श्लो० १)

(ಸಂಗವನ್ನು ತ್ಯಜಿಸಿ ಕರ್ಮಗಳನ್ನು ಮಾಡುತ್ತ ಹೋದರೆ ಈಶ್ವರಪ್ರಾಪ್ತಿಯೂ ಕೂಡ ಆಗುತ್ತದೆ.)

तस्मादसक्तः सततं कार्यं कर्म समाचर।
असक्तो ह्याचरन् कर्म परमाप्नोति पूरुषः ॥ १९ ॥

—अ० ३

सर्व कर्मांचा माझें ठिकाणीं निक्षेप करून निराशेनें युद्ध सुद्धां करण्यास हरकत नाहीं. (श्लो० १)

(ಎಲ್ಲ ಕರ್ಮಗಳನ್ನು ನನಗೆ ಸಮರ್ಪಿಸಿ ಆಶೆಯನ್ನು ತೊರೆದು ಯುದ್ಧವನ್ನೂ ಕೂಡ ಮಾಡಲು ಅಡ್ಡಿಯಿಲ್ಲ.)

मयि सर्वाणि कर्माणि संन्यस्याध्यात्मचेतसा।
निराशीर्निर्ममो भूत्वा युध्यस्व विगतज्वरः ॥ ३० ॥

—अ० ३

ज्यापासून सर्व भूतांची उत्पत्ति व विस्तार होतात, त्या ईश्वराचें स्वकर्मकुसुमांनीं अर्चन करावें. (श्लो० १)

(ಯಾವನಿಂದ ಎಲ್ಲ ಭೂತಗಳ ಉತ್ಪತ್ತಿ ಹಾಗೂ ವಿಸ್ತಾರವು ಆಗುವವೋ ಆ ಈಶ್ವರನನ್ನು ಸ್ವಕರ್ಮಕುಸುಮದಿಂದ ಅರ್ಚಿಸಬೇಕು.)

यतः प्रवृत्तिर्भूतानां येन सर्वमिदं ततम् ।
स्वकर्मणा तमभ्यर्च्य सिद्धिं विन्दति मानवः ।। ४६ ।।
—अ० १८.

'कर से काम करो, हरी सों ध्यान धरो.' (श्लो० ३)

('ಕೈಯಿಂದ ಕೆಲಸ, ಮನಸ್ಸಿನಿಂದ ಧ್ಯಾನ.')

नैव किञ्चित् करोमीति युक्तो मन्येत तत्त्ववित् ।
पश्यञ्शृण्वन् स्पृशञ्जिघ्रन्नश्नन् गच्छन् श्वसन् स्वपन्
।। ८ ।।

प्रलपन् विसृजन् गृह्णन्नुन्मिषन्निमिषन्नपि ।
इन्द्रियाणीन्द्रियार्थेषु वर्तन्त इति धारयन् ॥ ९ ॥

ब्रह्मण्याधाय कर्माणि सङ्गं त्यक्त्वा करोति यः ।
लिप्यते न स पापेन पद्मपत्रमिवाम्भसा ॥ १० ॥

—अ० ५

ज्यास आत्म्याचा आनंद प्राप्त झाला, त्यास कार्य कोणतें उरणार? (श्लो० १)

(ಆತ್ಮಾನಂದವನ್ನು ಪಡೆದವನಿಗೆ ಕರ್ತವ್ಯಕರ್ಮವು ಅದಾವದು?)

यस्त्वात्मरतिरेव स्यादात्मतृप्तश्च मानवः ।
आत्मन्येव च सन्तुष्टस्तस्य कार्यं न विद्यते ॥ १७ ॥

—अ० ३

इति **श्रीमद्ध्यानगीतायां** योगशास्त्रे श्रीकृष्णार्जुनसंवादे **कर्मयोगो** नाम सप्तमोऽध्यायः ।

अष्टमोऽध्यायः

# ज्ञानयोगः

## १. कर्मध्वंसः

सगळ्यांत श्रेष्ठ ज्ञान कोणतें? (श्लो० १)

(ಎಲ್ಲಕ್ಕೂ ಶ್ರೇಷ್ಠವಾದ ಜ್ಞಾನವು ಯಾವದು?)

श्रीभगवानुवाच—

ज्ञानं तेऽहं सविज्ञानमिदं वक्ष्याम्यशेषतः।
यज्ज्ञात्वा नेह भूयोऽन्यज्ज्ञातव्यमवशिष्यते ॥ २ ॥

—अ० ७

सर्व प्रकारच्या यज्ञांमध्यें ज्ञानयज्ञ श्रेष्ठ आहे कारण सर्व कर्मांची परिसमाप्ति ज्ञानामध्यें होते. (श्लो० १)

(ಎಲ್ಲ ಕರ್ಮಗಳ ಪರಿಸಮಾಪ್ತಿಯು ಜ್ಞಾನದಲ್ಲಿ ಆಗುವದರಿಂದ ಎಲ್ಲ ಬಗೆಯ ಯಜ್ಞಗಳಲ್ಲಿ ಜ್ಞಾನಯಜ್ಞವು ಶ್ರೇಷ್ಠವಾದದ್ದು.)

श्रेयान् द्रव्यमयाद्यज्ञाज्ज्ञानयज्ञः परन्तप ।
सर्वं कर्माखिलं पार्थ ज्ञाने परिसमाप्यते ॥ ३३ ॥

—अ० ४

ज्ञानाग्नीमुळें सर्व कर्मरूपी इंधनें भस्म होतात. (श्लो० १)

(ಜ್ಞಾನಾಗ್ನಿಯಿಂದ ಕರ್ಮರೂಪ ಇಂಧನವೆಲ್ಲವೂ ಸುಟ್ಟು ಭಸ್ಮವಾಗುವದು.)

यथैधांसि समिद्धोऽग्निर्भस्मसात् कुरुतेऽर्जुन ।
ज्ञानाग्निः सर्वकर्माणि भस्मसात् कुरुते तथा ॥ ३७ ॥

—अ० ४

ज्यानें ज्ञानाग्नीनें आपलीं सर्व कर्मे जाळून टाकलीं, त्यालाच पंडित हें नांव शोभतें. (श्लो० १)

(ಜ್ಞಾನಾಗ್ನಿಯಿಂದ ತನ್ನ ಕರ್ಮಗಳನ್ನೆಲ್ಲ ಸುಟ್ಟುಹಾಕಿದವನಿಗೇ 'ಪಂಡಿತ'ನೆಂಬ ಹೆಸರು ಒಪ್ಪುವದು.)

यस्य सर्वे समारम्भाः कामसङ्कल्पवर्जिताः ।
ज्ञानाग्निदग्धकर्माणं तमाहुः पंडितं बुधाः ॥ १९ ॥

—अ० ४

संशय हें नाशाचें मूळ असल्यानें ज्यास निःसंशय आत्मज्ञान प्राप्त झालें त्यासच कर्मबंधन राहत नाहीं. (श्लो० २)

(ಸಂಶಯವು ನಾಶದ ಮೂಲವಾಗಿರುವದರಿಂದ ಸಂಶಯರಹಿತವಾದ ಆತ್ಮಜ್ಞಾನವನ್ನು ಪಡೆದವನಿಗೇ ಕರ್ಮಬಂಧನವು ಉಳಿಯಲಾರದು.)

अज्ञश्चाश्रद्दधानश्च संशयात्मा विनश्यति।
नायं लोकोऽस्ति न परो न सुखं संशयात्मनः ॥ ४० ॥

योगसंन्यस्तकर्माणं ज्ञानसञ्छिन्नसंशयम्।
आत्मवन्तं न कर्माणि निबध्नन्ति धनञ्जय ॥ ४१ ॥

—अ० ४

## २. आत्मज्ञानस्य दुष्प्राप्यत्वम्

योगनदी ही गुप्त होऊन पुनः कालांतरानें प्रकट होत असते. (श्लो० २)

(ಯೋಗನದಿಯು ಗುಪ್ತವಾಗಿ ಪುನಃ ಕಾಲಾಂತರದಲ್ಲಿ ಪ್ರಕಟವಾಗುತ್ತಿರುತ್ತದೆ.)

एवं परम्पराप्राप्तमिमं राजर्षयो विदुः।
स कालेनेह महता योगो नष्टः परन्तप ॥ २ ॥

स एवायं मया तेऽद्य योगः प्रोक्तः पुरातनः।
भक्तोऽसि मे सखा चेति रहस्यं ह्येतदुत्तमम् ॥ ३ ॥

—अ० ४

ज्ञानी मनुष्य सांपडणें विरळा. (श्लो० १)

(ಜ್ಞಾನಿಯು ದೊರೆಯುವದು ವಿರಳ.)

मनुष्याणां सहस्रेषु कश्चिद्यतति सिद्धये।
यततामपि सिद्धानां कश्चिन्मां वेत्ति तत्त्वतः ॥ ३ ॥

—अ० ७

योग सिद्ध होऊन तें पुण्यपावन ज्ञान आत्मगत होण्यास कालावधि लागतोच. (श्लो० १)

(ಯೋಗವು ಸಿದ್ಧಿಸಿ ಆ ಪುಣ್ಯಪಾವನ ಜ್ಞಾನವು ಆತ್ಮಗತವಾಗಲು ಕೆಲವೊಂದು ವೇಳೆ ಬೇಕೇಬೇಕು.)

न हि ज्ञानेन सदृशं पवित्रमिह विद्यते।
तत्स्वयं योगसंसिद्धः कालेनात्मनि विन्दति॥ ३८॥

—अ० ४

### ३. ज्ञानोपदेशः

त्या ज्ञानाचा मार्ग तुला विनयपूर्वक सेवाबलानें तत्त्वदर्शी लोकांपासून मिळवितां येईल. (श्लो० १)

(ನೀನು ಆ ಜ್ಞಾನದ ಮಾರ್ಗವನ್ನು ತತ್ತ್ವದರ್ಶಿಗಳಿಂದ ವಿನಯ ಸೇವೆಯ ಬಲದಿಂದ ಪಡೆಯಬಲ್ಲೆ.)

तद्विद्धि प्रणिपातेन परिप्रश्नेन सेवया।
उपदेक्ष्यन्ति ते ज्ञानं ज्ञानिनस्तत्त्वदर्शिनः॥ ३४॥

—अ० ४

### ४. ज्ञानाभिक्रमः

#### अभिक्रमस्य महद्भयनाशकत्वम्

या ज्ञानमार्गास एकदां खरा प्रारंभ झाल्यावर त्यास कोणतींहि विघ्नें न येता तो आपल्यास सिद्धीस पोहोचवील. (श्लो० १)

(ಒಮ್ಮೆ ಈ ಜ್ಞಾನಮಾರ್ಗದ ನಿಜವಾದ ಪ್ರಾರಂಭವಾಯಿತೆಂದರೆ ಅದಕ್ಕೆ ಯಾವ ವಿಘ್ನಗಳೂ ಬಾರದಲೆ ಸಿದ್ಧಿಗೆ ಒಯ್ದು ಮುಟ್ಟಿಸುವದು.)

नेहाभिक्रमनाशोऽस्ति प्रत्यवायो न विद्यते।
स्वल्पमप्यस्य धर्मस्य त्रायते महतो भयात् ॥ ४० ॥

—अ० २

### ५. परपुरुषलाभः

अनन्यभक्तीनें सर्वव्यापी व सर्वकर्त्या परमेश्वरास आत्मसात् करून घेणें शक्य आहे. (श्लो० २)
(ಸರ್ವವ್ಯಾಪಿಯೂ ಸರ್ವಕರ್ತನೂ ಆದ ಪರಮೇಶ್ವರನನ್ನು ಅನನ್ಯಭಕ್ತಿಯಿಂದ ತನ್ನವನನ್ನಾಗಿ ಮಾಡಿಕೊಳ್ಳುವದು ಶಕ್ಯವಿದೆ.)

अव्यक्तोऽक्षर इत्युक्तस्तमाहुः परमां गतिम्।
यं प्राप्य न निवर्तन्ते तद्धाम परमं मम ॥ २१ ॥

पुरुषः स परः पार्थ भक्त्या लभ्यस्त्वनन्यया।
यस्यान्तःस्थानि भूतानि येन सर्वमिदं ततम् ॥ २२ ॥

—अ० ८

सर्व भूतांचें स्थान व उगम ईश्वर आहे असें जो पाहतो तोच ईश्वरांत मिळून जातो. (श्लो० १)

(ಈಶ್ವರನು ಸರ್ವಭೂತಗಳ ಸ್ಥಾನ ಹಾಗೂ ಉಗಮವೆಂಬುದನ್ನು ನೋಡುವವನೇ ಈಶ್ವರನಲ್ಲಿ ಬೆರೆತುಹೋಗುವನು.)

यदा भूतपृथग्भावमेकस्थमनुपश्यति।
तत एव च विस्तारं ब्रह्म सम्पद्यते तदा॥ ३०॥
—अ० १३

त्या ज्ञानानें तुझा मोहांधकार निरसून तुला आत्म्यामध्यें सर्व भूतें दिसतील. (श्लो० १)

(ಆ ಜ್ಞಾನದಿಂದ ನಿನ್ನ ಮೋಹಾಂಧಕಾರವು ಅಳಿದು ನಿನಗೆ ಆತ್ಮನಲ್ಲಿ ಎಲ್ಲ ಭೂತಗಳು ಕಾಣುವವು.)

यज्ज्ञात्वा न पुनर्मोहमेवं यास्यसि पाण्डव।
येन भूतान्यशेषेण द्रक्ष्यस्यात्मन्यथो मयि॥ ३५॥
—अ० ४

जी सर्व लोकांची रात्र, तो ज्ञानी लोकांचा दिवस होय. (श्लो० १)

(ಎಲ್ಲ ಜನರ ಇರುಳು ಜ್ಞಾನಿಗಳಿಗೆ ಹಗಲು.)

या निशा सर्वभूतानां तस्यां जागर्ति संयमी ।
यस्यां जाग्रति भूतानि सा निशा पश्यतो मुनेः ॥ ६९ ॥

—अ० २

## ६. समदर्शनम्

ज्यास परमेश्वराचें समदर्शन घडतें त्यासच ज्ञानी म्हणतां येईल. (श्लो० २)

(ಪರಮೇಶ್ವರನ ಸಮದರ್ಶನವನ್ನು ಹೊಂದಿದವನಿಗೇ ಜ್ಞಾನಿಯೆಂದೆನ್ನಲು ಬರುವದು.)

समं सर्वेषु भूतेषु तिष्ठन्तं परमेश्वरम् ।
विनश्यत्स्वविनश्यन्तं यः पश्यति स पश्यति ॥ २७ ॥

समं पश्यन्हि सर्वत्र समवस्थितमीश्वरम् ।
न हिनस्त्यात्मनात्मानं ततो याति परां गतिम् ॥ २८ ॥

—अ० १३

## ७. अतिपुण्यप्राप्तिः

तूं सर्व पातकी लोकांमध्यें अग्रगण्य असलास, तरी ज्ञानरूप नौकेनें तूं सर्व पातकें तरून जाशील. (श्लो० १)

(ನೀನು ಎಲ್ಲ ಪಾತಕಿಗಳಲ್ಲಿ ಅಗ್ರಗಣ್ಯನಿದ್ದರೂ ಜ್ಞಾನವೆಂಬ ನೌಕೆಯಿಂದ ಎಲ್ಲ ಪಾತಕಗಳನ್ನು ದಾಟಿಹೋಗುವಿ.)

अपि चेदसि पापेभ्यः सर्वेभ्यः पापकृत्तमः।
सर्वं ज्ञानप्लवेनैव वृजिनं सन्तरिष्यसि ॥ ३६ ॥

—अ० ४

या ज्ञानरूप पुण्यास मर्यादाच नाहीं. (श्लो० १)

(ಈ ಜ್ಞಾನರೂಪಿಯಾದ ಪುಣ್ಯಕ್ಕೆ ಮೇರೆಯೇ ಇಲ್ಲ.)

वेदेषु यज्ञेषु तपःसु चैव
दानेषु यत्पुण्यफलं प्रदिष्टम्।

अत्येति तत्सर्वमिदं विदित्वा
योगी परं स्थानमुपैति चाद्यम् ॥ २८ ॥
—अ० ८

इति **श्रीमद्ध्यानगीतायां** योगशास्त्रे श्रीकृष्णार्जुन-संवादे **ज्ञानयोगो** नामाष्टमोऽध्यायः ।

नवमोऽध्यायः

# ध्यानयोगः

## १. चतुर्मार्गसमन्वयः

ध्यान, ज्ञान, कर्म व भक्ति हे ईश्वरास मिळणारे चार मार्ग होत. (श्लो० २)

(ಧ್ಯಾನ, ಜ್ಞಾನ, ಕರ್ಮ ಹಾಗೂ ಭಕ್ತಿಗಳು ಈಶ್ವರನನ್ನು ಕೂಡುವ ನಾಲ್ಕು ಮಾರ್ಗಗಳು.)

श्रीभगवानुवाच—

ध्यानेनात्मनि पश्यन्ति केचिदात्मानमात्मना ।
अन्ये साङ्ख्येन योगेन कर्मयोगेन चापरे ॥ २४ ॥

अन्ये त्वेवमजानन्तः श्रुत्वान्येभ्य उपासते ।
तेऽपि चातितरन्त्येव मृत्युं श्रुतिपरायणाः ॥ २५ ॥

—अ० १३

## २. आसनस्थैर्यम्

एकांतांत आसन स्थिर करून, अचल चित्तानें, जो योगी सतत माझी उपासना करतो, त्यास माझी आंत्यंतिक शांति व सुख प्राप्त होतात. (श्लो० ६)

(ಏಕಾಂತದಲ್ಲಿ ಆಸನವನ್ನು ಸ್ಥಿರಗೊಳಿಸಿ, ಅಚಲ ಚಿತ್ತದಿಂದ, ಸತತವಾಗಿ ನನ್ನ ಉಪಾಸನೆಯನ್ನು ಮಾಡುವ ಯೋಗಿಗೆ, ನನ್ನ ಆತ್ಯಂತಿಕ ಶಾಂತಿ ಹಾಗೂ ಸುಖಗಳು ದೊರೆಯುತ್ತವೆ.)

योगी युञ्जीत सततमात्मानं रहसि स्थितः।
एकाकी यतचित्तात्मा निराशीरपरिग्रहः ॥ १० ॥

शुचौ देशे प्रतिष्ठाप्य स्थिरमासनमात्मनः।
नात्युच्छ्रितं नातिनीचं चैलाजिनकुशोत्तरम् ॥ ११ ॥

तत्रैकाग्रं मनः कृत्वा यतचित्तेन्द्रियक्रियः।
उपविश्यासने युञ्ज्याद्योगमात्मविशुद्धये ॥ १२ ॥

समं कायशिरोग्रीवं धारयन्नचलं स्थिरः।
सम्प्रेक्ष्य नासिकाग्रं स्वं दिशश्चानवलोकयन् ॥ १३ ॥

प्रशान्तात्मा विगतभीर्ब्रह्मचारिव्रते स्थितः।
मनः संयम्य मच्चित्तो युक्त आसीत मत्परः॥ १४॥

युञ्जन्नेवं सदात्मानं योगी नियतमानसः।
शान्तिं निर्वाणपरमां मत्संस्थामधिगच्छति॥ १५॥

—अ० ६

## ३. यमनियमाः

### अभ्यासवैराग्ये

अति चंचल मनाचा निग्रह अभ्यासवैराग्यांवांचून होणें शक्य नाहीं. (श्लो० ४)

(ಅತಿ ಚಂಚಲವಾದ ಮನಸ್ಸಿನ ನಿಗ್ರಹವು ಅಭ್ಯಾಸವೈರಾಗ್ಯಗಳಿಲ್ಲದೆ ಸಾಧ್ಯವಿಲ್ಲ.)

अर्जुन उवाच—

योऽयं योगस्त्वया प्रोक्तः साम्येन मधुसूदन।
एतस्याहं न पश्यामि चञ्चलत्वात् स्थितिं स्थिराम्॥३३॥

चञ्चलं हि मनः कृष्ण प्रमाथि बलवद्दृढम्।
तस्याहं निग्रहं मन्ये वायोरिव सुदुष्करम्॥ ३४॥

श्रीभगवानुवाच—

असंशयं महाबाहो मनो दुर्निग्रहं चलम्।
अभ्यासेन तु कौन्तेय वैराग्येण च गृह्यते ॥ ३५ ॥

असंयतात्मना योगो दुष्प्राप इति मे मतिः।
वश्यात्मना तु यतता शक्योऽवाप्तुमुपायतः ॥ ३६ ॥

—अ० ६

**संयमाग्निः**

कांहीं लोक विषयांची इंद्रियांत, व कांहीं, इंद्रियांची संयमांत आहुती देतात. (श्लो० २)

(ಕೆಲವರು ಇಂದ್ರಿಯಗಳಲ್ಲಿ ವಿಷಯಗಳನ್ನು ಹಾಗೂ ಕೆಲವರು ಸಂಯಮದಲ್ಲಿ ಇಂದ್ರಿಯಗಳನ್ನು ಆಹುತಿ ಕೊಡುತ್ತಾರೆ.)

श्रोत्रादीनीन्द्रियाण्यन्ये संयमाग्निषु जुह्वति।
शब्दादीन् विषयानन्य इन्द्रियाग्निषु जुह्वति ॥ २६ ॥

सर्वाणीन्द्रियकर्माणि प्राणकर्माणि चापरे।
आत्मसंयमयोगाग्नौ जुह्वति ज्ञानदीपिते ॥ २७ ॥

—अ० ४

## युक्ताहारविहारत्वम्

ज्याचे आहार, निद्रा व विहार युक्त आहेत त्यासच योग साध्य होतो. (श्लो० २)

(ಯಾವನ ಆಹಾರ, ನಿದ್ರೆ ಹಾಗೂ ವಿಹಾರಗಳು ಯುಕ್ತವಾಗಿರುವವೋ ಅವನಿಗೇ ಯೋಗವು ಸಾಧ್ಯವಾಗುತ್ತದೆ.)

नात्यश्नतस्तु योगोऽस्ति न चैकान्तमनश्नतः।
न चातिस्वप्नशीलस्य जाग्रतो नैव चार्जुन॥ १६॥

युक्ताहारविहारस्य युक्तचेष्टस्य कर्मसु।
युक्तस्वप्नावबोधस्य योगो भवति दुःखहा॥ १७॥

—अ० ६

## सुखदुःखसमता

शीत-उष्ण, सुख-दुःख, मित्र-शत्रु, यांज कडे जो योगी समदृष्टीनें पाहतो त्यास परमात्मा अगदी जवळ आहे. (श्लो० ३)

(ಶೀತೋಷ್ಣಗಳನ್ನು, ಸುಖದುಃಖಗಳನ್ನು, ಮಿತ್ರಶತ್ರು ಗಳನ್ನು ಸಮದೃಷ್ಟಿಯಿಂದ ನೋಡುವ ಯೋಗಿಗೆ ಪರಮಾತ್ಮನು ತೀರ ಸಮೀಪದಲ್ಲಿರುವನು.)

जितात्मनः प्रशान्तस्य परमात्मा समाहितः।
शीतोष्णसुखदुःखेषु तथा मानापमानयोः ॥ ७ ॥

ज्ञानविज्ञानतृप्तात्मा कूटस्थो विजितेन्द्रियः।
युक्त इत्युच्यते योगी समलोष्टाश्मकाञ्चनः ॥ ८ ॥

सुहृन्मित्रार्युदासीनमध्यस्थद्वेष्यबन्धुषु।
साधुष्वपि च पापेषु समबुद्धिर्विशिष्यते ॥ ९ ॥

—अ० ६

**निर्वेदः**

(पाहिलेलें व पाहावयाचें) ऐकिलेलें व ऐकावयाचें यांबद्दल निर्वेद उत्पन्न होऊन समाधीमध्यें तुझें चित्त स्थिर राहूदे. (श्लो० २)

[(ನೋಡಿದ್ದು ಹಾಗೂ ನೋಡಲಿರುವದು) ಕೇಳಿದ್ದು ಹಾಗೂ ಕೇಳಲಿರುವದರ ಬಗ್ಗೆ ನಿರ್ವೇದವುಂಟಾಗಿ, ಸಮಾಧಿಯಲ್ಲಿ ನಿನ್ನ ಚಿತ್ತವು ಸ್ಥಿರವಾಗಿರಲಿ.]

यदा ते मोहकलिलं बुद्धिर्व्यतितरिष्यति।
तदा गन्तासि निर्वेदं श्रोतव्यस्य श्रुतस्य च॥५२॥

श्रुतिविप्रतिपन्ना ते यदा स्थास्यति निश्चला।
समाधावचला बुद्धिस्तदा योगमवाप्स्यसि॥५३॥

—अ० २

### ४. प्राणापानसमता

भ्रूमध्यदृष्टि, प्राणापानसमता, यमनियम व ईश्वरपरायणता हींच मोक्षाचीं साधनें होत. (श्लो० २)

(ಭ್ರೂಮಧ್ಯದೃಷ್ಟಿ, ಪ್ರಾಣಾಪಾನಸಮತೆ, ಯಮನಿಯಮಗಳು ಹಾಗೂ ಈಶ್ವರಪರಾಯಣತೆ ಇವೇ ಮೋಕ್ಷದ ಸಾಧನಗಳು.)

स्पर्शान् कृत्वा बहिर्बाह्यांश्चक्षुश्चैवान्तरे भ्रुवोः।
प्राणापानौ समौ कृत्वा नासाभ्यन्तरचारिणौ॥२७॥

यतेन्द्रियमनोबुद्धिर्मुनिर्मोक्षपरायणः।
विगतेच्छाभयक्रोधो यः सदा मुक्त एव सः॥२८॥

—अ० ५

## ५. प्रत्याहारधारणाध्यानानि

निर्विण्णचित्तानें, सर्व संकल्पांपासून मनास हळू-हळू वळवून आत्म्याचें ठिकाणीं स्थिर करावें. (श्लो० ४)

(ನಿರ್ವಿಣ್ಣಚಿತ್ತದಿಂದ, ಎಲ್ಲ ಸಂಕಲ್ಪಗಳಿಂದ ಮನಸ್ಸನ್ನು ಸಾವಕಾಶವಾಗಿ ಹೊರಳಿಸಿ ಆತ್ಮನಲ್ಲಿ ಸ್ಥಿರಗೊಳಿಸಬೇಕು.)

तं विद्याद्दुःखसंयोगवियोगं योगसंज्ञितम् ।
स निश्चयेन योक्तव्यो योगो निर्विण्णचेतसा ॥ २३ ॥

सङ्कल्पप्रभवान् कामांस्त्यक्त्वा सर्वानशेषतः ।
मनसैवेन्द्रियग्रामं विनियम्य समन्ततः ॥ २४ ॥

शनैः शनैरुपरमेद्बुद्ध्या धृतिगृहीतया ।
आत्मसंस्थं मनः कृत्वा न किञ्चिदपि चिन्तयेत् ॥ २५ ॥

यतो यतो निश्चरति मनश्चञ्चलमस्थिरम् ।
ततस्ततो नियम्यैतदात्मन्येव वशं नयेत् ॥ २६ ॥

—अ० ६

## ६. समाधिदीपः

ज्याचें चित्त आत्म्याचें ठिकाणीं निवात दीपाप्रमाणें स्थिर होतें त्यास योगी म्हण्ता येईल. (श्लो० २)

(ಯಾವನ ಚಿತ್ತವು ಆತ್ಮನಲ್ಲಿ ಗಾಳಿ ಸೋಂಕದ ದೀಪದಂತೆ ಸ್ಥಿರವಾಗುವದೋ ಆತನಿಗೆ ಯೋಗಿಯೆಂದೆನ್ನಲು ಬರುವದು.)

यदा विनियतं चित्तमात्मन्येवावतिष्ठते।
निःस्पृहः सर्वकामेभ्यो युक्त इत्युच्यते तदा ॥ १८ ॥

यथा दीपो निवातस्थो नेङ्गते सोपमा स्मृता।
योगिनो यतचित्तस्य युञ्जतो योगमात्मनः ॥ १९ ॥

—अ० ६

## ७. आत्मदर्शनम्

आत्मदर्शन. (श्लो० १)

(ಆತ್ಮದರ್ಶನ.)

यत्रोपरमते चित्तं निरुद्धं योगसेवया।
यत्र चैवात्मनात्मानं पश्यन्नात्मनि तुष्यति ।। २० ।।

—अ० ६

## ८. सुखब्रह्मैक्यम्

आत्मदर्शनानें जें आत्यंतिक सुख प्राप्त होतें त्यापासून मोठें दुःख सुद्धां योग्यास च्युत करूं शकत नाहीं. (श्लो० २)

(ಹಿರಿದಾದ ದುಃಖವೂ ಕೂಡ ಯೋಗಿಯನ್ನು ಆತ್ಮದರ್ಶನದಿಂದ ಲಭಿಸುವ ಆತ್ಯಂತಿಕ ಸುಖದಿಂದ ಚ್ಯುತಗೊಳಿಸಲಾರದು.)

सुखमात्यन्तिकं यत्तद्बुद्धिग्राह्यमतीन्द्रियम्।
वेत्ति यत्र न चैवायं स्थितश्चलति तत्त्वतः ।। २१ ।।

यं लब्ध्वा चापरं लाभं मन्यते नाधिकं ततः।
यस्मिन् स्थितो न दुःखेन गुरुणापि विचाल्यते ।। २२ ।।

—अ० ६

योग्यास होणारें आत्यंतिक सुख म्हणजेच आत्मानुभव होय. (श्लो० २)

(ಯೋಗಿಯು ಅನುಭವಕ್ಕೆ ಬರುವ ಅತ್ಯಂತಿಕ ಸುಖವೆಂದರೇ ಆತ್ಮಾನುಭವವು.)

प्रशान्तमनसं ह्येनं योगिनं सुखमुत्तमम् ।
उपैति शान्तरजसं ब्रह्मभूतमकल्मषम् ॥ २७ ॥

युञ्जन्नेवं सदात्मानं योगी विगतकल्मषः ।
सुखेन ब्रह्मसंस्पर्शमत्यन्तं सुखमश्नुते ॥ २८ ॥

—अ० ६

## ९. अभितो ब्रह्मनिर्वाणाधिगमः

ज्यानें अंतरात्म्याचें सुख आंत अनुभविलें त्याच्या सभोंवार ब्रह्म घिरटया घालीत असतें. (श्लो० ३)

(ಆತ್ಮಸುಖವನ್ನು ಅಂತರಂಗದಲ್ಲಿ ಅನುಭವಿಸಿದವನ ಸುತ್ತುಮುತ್ತಲೂ ಬ್ರಹ್ಮವು ತಿರುಗುತ್ತಿರುತ್ತದೆ.)

योऽन्तःसुखोऽन्तरारामस्तथान्तर्ज्योतिरेव यः ।
स योगी ब्रह्मनिर्वाणं ब्रह्मभूतोऽधिगच्छति ॥ २४ ॥

लभन्ते ब्रह्मनिर्वाणमृषयः क्षीणकल्मषाः ।
छिन्नद्वैधा यतात्मानः सर्वभूतहिते रताः ॥ २५ ॥

कामक्रोधवियुक्तानां यतीनां यतचेतसाम् ।
अभितो ब्रह्मनिर्वाणं वर्तते विदितात्मनाम् ॥ २६ ॥

—अ० ५

## १०. सर्वत्र तदीक्षणम्

अशा योग्यासच दोनी प्रकारें समदर्शन घडतें. (श्लो० ४)

(ಇಂಥ ಯೋಗ್ಯನಿಗೇ ಎರಡೂ ವಿಧದಲ್ಲಿ ಸಮದರ್ಶನವಾಗುತ್ತದೆ.)

सर्वभूतस्थमात्मानं सर्वभूतानि चात्मनि ।
ईक्षते योगयुक्तात्मा सर्वत्र समदर्शनः ॥ २९ ॥

यो मां पश्यति सर्वत्र सर्वं च मयि पश्यति ।
तस्याहं न प्रणश्यामि स च मे न प्रणश्यति ॥ ३० ॥

सर्वभूतस्थितं यो मां भजत्येकत्वमास्थितः ।
सर्वथा वर्तमानोऽपि स योगी मयि वर्तते ॥ ३१ ॥

आत्मौपम्येन सर्वत्र समं पश्यति योऽर्जुन।
सुखं वा यदि वा दुःखं स योगी परमो मतः॥ ३२॥
—अ० ६

## ११. योगभक्तिसंयोगः

ज्ञानी व कर्मी लोकांपेक्षां योगी श्रेष्ठ असून, सर्व योग्यांमध्येंहि भक्तिमान् योगी श्रेष्ठ होय. (श्लो० २)

(ಜ್ಞಾನಿ ಹಾಗೂ ಕರ್ಮಿಗಳಿಗಿಂತ ಯೋಗಿಯು ಶ್ರೇಷ್ಠನು; ಎಲ್ಲ ಯೋಗಿಗಳಲ್ಲಿಯೂ ಭಕ್ತಿಯುತನಾದ ಯೋಗಿಯು ಶ್ರೇಷ್ಠನು.)

तपस्विभ्योऽधिको योगी ज्ञानिभ्योऽपि मतोऽधिकः।
कर्मिभ्यश्चाधिको योगी तस्माद्योगी भवार्जुन॥ ४६॥

योगिनामपि सर्वेषां मद्गतेनान्तरात्मना।
श्रद्धावान् भजते यो मां स मे युक्ततमो मतः॥ ४७॥
—अ० ६

इति **श्रीमद्ध्यानगीतायां** योगशास्त्रे श्रीकृष्णार्जुन-संवादे **ध्यानयोगो** नाम नवमोऽध्यायः।

दशमोऽध्यायः

## भक्तियोगः

### १. उपासनास्वरूपम्

अव्यक्ताच्या उपासनेंत क्लेशच फार. (श्लो० ५)

(ಅವ್ಯಕ್ತದ ಉಪಾಸನೆಯಲ್ಲಿ ಕ್ಲೇಶವೇ ಹೆಚ್ಚು.)

अर्जुन उवाच—

एवं सततयुक्ता ये भक्तास्त्वां पर्युपासते।
ये चाप्यक्षरमव्यक्तं तेषां के योगवित्तमाः ॥ १ ॥

श्रीभगवानुवाच—

मय्यावेश्य मनो ये मां नित्ययुक्ता उपासते।
श्रद्धया परयोपेतास्ते मे युक्ततमा मताः ॥ २ ॥

ये त्वक्षरमनिर्देश्यमव्यक्तं पर्युपासते।
सर्वत्रगमचिन्त्यं च कूटस्थमचलं ध्रुवम् ॥ ३ ॥

सन्नियम्येन्द्रियग्रामं सर्वत्र समबुद्धयः।
ते प्राप्नुवन्ति मामेव सर्वभूतहिते रताः॥ ४॥

क्लेशोऽधिकतरस्तेषामव्यक्तासक्तचेतसाम्।
अव्यक्ता हि गतिर्दुःखं देहवद्भिरवाप्यते॥ ५॥

—अ० १२

सर्व कर्में मदर्थ करून अनन्यभावानें माझी ध्यान उपासना जे करतात त्यांस लवकरच मी संसार-सागरांतून पार उतरतो. (श्लो० २)

(ಎಲ್ಲ ಕರ್ಮಗಳನ್ನು ನನಗಾಗಿ ಮಾಡಿ ಅನನ್ಯಭಾವದಿಂದ ನನ್ನ ಧ್ಯಾನೋಪಾಸನೆಯನ್ನು ಮಾಡುವವರನ್ನು ನಾನು ಬೇಗನೇ ಸಂಸಾರಸಾಗರದಿಂದ ದಾಟಿಸುತ್ತೇನೆ.)

ये तु सर्वाणि कर्माणि मयि संन्यस्य मत्पराः।
अनन्येनैव योगेन मां ध्यायन्त उपासते॥ ६॥

तेषामहं समुद्धर्ता मृत्युसंसारसागरात्।
भवामि न चिरात्पार्थ मय्यावेशितचेतसाम्॥ ७॥

—अ० १२

## २. मायासन्तरणम्

माझी त्रिगुणमयी माया तरून जाण्याचें साधन म्हणजे केवळ माझी अनन्यप्रपत्तीच होय. (श्लो० २)

(ನನ್ನಲ್ಲಿ ಅನನ್ಯಶರಣಾಗತಿಯೇ ನನ್ನ ತ್ರಿಗುಣಮಯ ಮಾಯೆಯನ್ನು ದಾಟುವ ಸಾಧನವು.)

त्रिभिर्गुणमयैर्भावैरेभिः सर्वमिदं जगत्।
मोहितं नाभिजानाति मामेभ्यः परमव्ययम्॥ १३॥
दैवी ह्येषा गुणमयी मम माया दुरत्यया।
मामेव ये प्रपद्यन्ते मायामेतां तरन्ति ते॥ १४॥

—अ० ७

राग-भय-क्रोध टाकून, ज्ञानतपानें पावन होऊन, माझ्या आश्रयानें आजपर्यंत पुष्कळ लोक मला मिळून गेले आहेत. (श्लो० १)

(ರಾಗಭಯಕ್ರೋಧಗಳನ್ನು ತೊರೆದು, ಜ್ಞಾನತಪದಿಂದ ಪಾವನರಾಗಿ, ನನ್ನ ಆಶ್ರಯದಿಂದ ಇಂದಿನವರೆಗೆ ಅನೇಕ ಜನರು ನನ್ನಲ್ಲಿ ಬೆರೆತುಹೋಗಿದ್ದಾರೆ.)

वीतरागभयक्रोधा मन्मया मामुपाश्रिताः।
बहवो ज्ञानतपसा पूता मद्भावमागताः॥ १०॥

—अ० ४

दुष्कर्मी लोकांस मजला प्रपन्न होणें शक्य नाहीं. (श्लो० १)

(ದುಷ್ಕರ್ಮಿಗಳು ನನಗೆ ಶರಣಾಗತರಾಗಲಾರರು.)

न मां दुष्कृतिनो मूढाः प्रपद्यन्ते नराधमाः।
माययापहृतज्ञाना आसुरं भावमाश्रिताः॥ १५॥

—अ० ७

ज्यांचें पातक लयास गेलें त्यांचे ठायींच माझी भक्ति उत्पन्न होते. (श्लो० १)

(ಪಾತಕವು ಅಳಿದವರಲ್ಲಿಯೇ ನನ್ನ ಭಕ್ತಿಯು ಹುಟ್ಟುತ್ತದೆ.)

येषां त्वन्तगतं पापं जनानां पुण्यकर्मणाम्।
ते द्वन्द्वमोहनिर्मुक्ता भजन्ते मां दृढव्रताः॥ २८॥

—अ० ७

अनन्यभक्ति करणारा व सम्यग्व्यवसित असा दुराचारी मनुष्य सुद्धां साधु होऊं शकतो. (श्लो० २)

(ಅನನ್ಯಭಕ್ತಿಯುಳ್ಳ ಹಾಗೂ ಸಮ್ಯಗ್ವ್ಯವಸಿತನಾದ ದುರಾಚಾರಿಯೂ ಕೂಡ ಸಾಧುವಾಗಬಲ್ಲನು.)

अपि चेत्सुदुराचारो भजते मामनन्यभाक्।
साधुरेव स मन्तव्यः सम्यग्व्यवसितो हि सः ॥ ३० ॥
क्षिप्रं भवति धर्मात्मा शश्वच्छान्तिं निगच्छति।
कौन्तेय प्रतिजानीहि न मे भक्तः प्रणश्यति ॥ ३१ ॥

—अ० ९

माझी भक्ति करणारे सर्वकुलजातिवर्णांचे लोक मला सारखेच प्रिय आहेत. (श्लो० २)

(ನನ್ನಲ್ಲಿ ಭಕ್ತಿಯನ್ನಿಟ್ಟ ಎಲ್ಲ ಕುಲಜಾತಿವರ್ಣಗಳ ಜನರು ನನಗೆ ಸಮಾನಪ್ರಿಯರೇ ಆಗಿದ್ದಾರೆ.)

मां हि पार्थ व्यपाश्रित्य येऽपि स्युः पापयोनयः।
स्त्रियो वैश्यास्तथा शूद्रास्तेऽपि यान्ति परां गतिम् ॥३२॥

किं पुनर्ब्राह्मणाः पुण्या भक्ता राजर्षयस्तथा।
(अनित्यमसुखं लोकमिमं प्राप्य भजस्व माम्॥ ३३॥)
—अ० ९

जरामरणमोक्षाकरितां टाहो फोडणारे लोकच माझें स्वरूप जाणूं शकतात. (श्लो० १)

(ಮುಪ್ಪು ಸಾವುಗಳಿಂದ ಬಿಡುಗಡೆ ಹೊಂದಲು, ತಳಮಳಿಸುವ ಜನರೇ ನನ್ನ ಸ್ವರೂಪವನ್ನು ಅರಿಯುಬಲ್ಲರು.)

जरामरणमोक्षाय मामाश्रित्य यतन्ति ये।
ते ब्रह्म तद्विदुः कृत्स्नमध्यात्मं कर्म चाखिलम्॥ २९॥
—अ० ७

## ३. कीर्तनसुखम्

सर्व भूतांचा प्रभव मी आहे हें जाणून, अनन्यचित्तानें माझें अखंड कीर्तन करणारे लोकच महात्मे होत. (श्लो० २)

(ಸರ್ವ ಭೂತಗಳ ಪ್ರಭವನು ನಾನೆಂಬುವನ್ನು ಅರಿತು, ಅನನ್ಯ ಚಿತ್ತದಿಂದ ನನ್ನ ಅಖಂಡ ಕೀರ್ತನವನ್ನು ಮಾಡುವ ಜನರೇ ಮಹಾತ್ಮರು.)

महात्मानस्तु मां पार्थ दैवीं प्रकृतिमाश्रिताः।
भजन्त्यनन्यमनसो ज्ञात्वा भूतादिमव्ययम् ॥ १३ ॥

सततं कीर्तयन्तो मां यतन्तश्च दृढव्रताः।
नमस्यन्तश्च मां भक्त्या नित्ययुक्ता उपासते ॥ १४ ॥

—अ० ९

अनन्यचित्तानें, जो सदा माझें अखंड स्मरण करतो त्यास मी सर्वदा सुलभ आहे. (श्लो० १)

(ಅನನ್ಯಚಿತ್ತದಿಂದ, ನನ್ನ ಅಖಂಡ ಸ್ಮರಣೆಯನ್ನು ಯಾವಾಗಲೂ ಮಾಡುವವನಿಗೆ ನಾನು ಸುಲಭನಾಗಿದ್ದೇನೆ.)

अनन्यचेताः सततं यो मां स्मरति नित्यशः।
तस्याहं सुलभः पार्थ नित्ययुक्तस्य योगिनः ॥ १४ ॥

—अ० ८

मी सर्वांचा प्रभव आहे असें जाणून, भावयुक्त होऊन, ते माझें ठिकाणीं चित्त ठेवितात व परस्परांच्या आनंदांत लीन होतात. (श्लो० २)

(ನಾನು ಎಲ್ಲದರ ಪ್ರಭವನೆಂದು ಅರಿತು, ಭಾವಯುಕ್ತರಾಗಿ, ಅವರು ನನ್ನಲ್ಲಿ ಚಿತ್ತವನ್ನಿಡುತ್ತಾರೆ ಹಾಗೂ ಪರಸ್ಪರರ ಆನಂದದಲ್ಲಿ ತಲ್ಲೀನರಾಗುತ್ತಾರೆ.)

अहं सर्वस्य प्रभवो मत्तः सर्वं प्रवर्तते।
इति मत्वा भजन्ते मां बुधा भावसमन्विताः ॥ ८ ॥

मच्चित्ता मद्गतप्राणा बोधयन्तः परस्परम्।
कथयन्तश्च मां नित्यं तुष्यन्ति च रमन्ति च ॥ ९ ॥

—अ० १०

### ४. देवभक्तसंयोगः

अशा भक्तियुक्त योग्यांस बुद्धीचा मार्ग दाखवून, त्यांजवर कृपा करण्याच्या उद्देशानें, मी त्यांजपुढें आत्मदीप पाजळतो. (श्लो० २)

(ಇಂಥ ಭಕ್ತಿಯುತರಾದ ಯೋಗಿಗಳಿಗೆ ಬುದ್ಧಿಯ ದಾರಿಯನ್ನು ತೋರಿಸಿ, ಅವರನ್ನು ಕರುಣಿಸುವ ಉದ್ದೇಶದಿಂದ, ನಾನು ಅವರೆದುರು ಆತ್ಮದೀಪವನ್ನು ಬೆಳಗುತ್ತೇನೆ.)

तेषां सततयुक्तानां भजतां प्रीतिपूर्वकम् ।
ददामि बुद्धियोगं तं येन मामुपयान्ति ते ॥ १० ॥

तेषामेवानुकम्पार्थमहमज्ञानजं तमः ।
नाशयाम्यात्मभावस्थो ज्ञानदीपेन भास्वता ॥ ११ ॥

—अ० १०

माझी अनन्य व अखंडित उपासना करणाऱ्यांचा योगक्षेम मीच चालवितो. (श्लो० १)

(ನನ್ನ ಅನನ್ಯ ಹಾಗೂ ಅಖಂಡವಾದ ಉಪಾಸನೆಯನ್ನು ಮಾಡುವವರ ಯೋಗಕ್ಷೇಮವನ್ನು ನಾನೇ ನಡೆಸುತ್ತೇನೆ.)

अनन्याश्चिन्तयन्तो मां ये जनाः पर्युपासते ।
तेषां नित्याभियुक्तानां योगक्षेमं वहाम्यहम् ॥ २२ ॥

—अ० ९

### ५. ज्ञानवतो भक्तशिरोमणित्वम्

चतुर्विध भक्तांमध्यें माझी एकनिष्ठ भक्ति करणारा ज्ञानी भक्तच श्रेष्ठ होय. (श्लो० ३)

(ನಾಲ್ಕು ಬಗೆಯ ಭಕ್ತರಲ್ಲಿ, ನನ್ನಲ್ಲಿ ಏಕನಿಷ್ಠ ಭಕ್ತಿಯನ್ನಿಂಸಿದ ಜ್ಞಾನಿಯಾದ ಭಕ್ತನೇ ಶ್ರೇಷ್ಠನು.)

चतुर्विधा भजन्ते मां जनाः सुकृतिनोऽर्जुन।
आर्तो जिज्ञासुरर्थार्थी ज्ञानी च भरतर्षभ॥ १६॥
तेषां ज्ञानी नित्ययुक्त एकभक्तिर्विशिष्यते।
प्रियो हि ज्ञानिनोऽत्यर्थमहं स च मम प्रियः॥ १७॥
उदाराः सर्व एवैते ज्ञानीत्वात्मैव मे मतम्।
आस्थितः स हि युक्तात्मा मामेवानुत्तमां गतिम्॥ १८॥

—अ० ७

ज्ञानी भक्तास सर्व जग वासुदेवमयच दिसतें. (श्लो० १)

(ಜ್ಞಾನಿಯಾದ ಭಕ್ತನಿಗೆ ಜಗವೆಲ್ಲ ವಾಸುದೇವಮಯವಾಗಿಯೇ ತೋರುತ್ತದೆ.)

वहूनां जन्मनामन्ते ज्ञानवान् मां प्रपद्यते।
वासुदेवः सर्वमिति स महात्मा सुदुर्लभः॥ १९॥

—अ० ७

## ६. ईश्वरप्रवेशः

माझें ठिकाणीं मन बुद्धि ठेवशील, तर तुला माझें ठिकाणींच वास मिळेल. (श्लो० १)

(ನನ್ನಲ್ಲಿ ಮನಬುದ್ಧಿಗಳನ್ನಿಟ್ಟಿಯಾದರೆ ನಿನಗೆ ನನ್ನಲ್ಲಿಯೇ ವಾಸವು ದೊರಕುವದು.)

मय्येव मन आधत्स्व मयि बुद्धिं निवेशय।
निवसिष्यसि मय्येव अत ऊर्ध्वं न संशयः ॥ ८ ॥

—अ० १२

उत्कट नीति, ध्यानयोग व पराभक्ति यांनीं माझें स्वरूपज्ञान झाल्यानंतर साधक माझ्यामध्यें प्रवेश करूं शकतो. (श्लो० ५)

(ಉತ್ಕಟ ನೀತಿ, ಧ್ಯಾನಯೋಗ ಹಾಗೂ ಪರಾಭಕ್ತಿ ಇವುಗಳಿಂದ ನನ್ನ ಸ್ವರೂಪಜ್ಞಾನವಾದನಂತರ ಸಾಧಕನು ನನ್ನಲ್ಲಿ ಪ್ರವೇಶಿಸಬಲ್ಲನು.)

बुद्ध्या विशुद्धया युक्तो धृत्यात्मानं नियम्य च।
शब्दादीन्विषयांस्त्यक्त्वा रागद्वेषौ व्युदस्य च ॥ ५१ ॥

विविक्तसेवी लघ्वाशी यतवाक्कायमानसः।
ध्यानयोगपरो नित्यं वैराग्यं समुपाश्रितः॥ ५२॥

अहङ्कारं बलं दर्पं कामं क्रोधं परिग्रहम्।
विमुच्य निर्ममः शान्तो ब्रह्मभूयाय कल्पते॥ ५३॥

ब्रह्मभूतः प्रसन्नात्मा न शोचति न काङ्क्षति।
समः सर्वेषु भूतेषु मद्भक्तिं लभते पराम्॥ ५४॥

भक्त्या मामभिजानाति यावान्यश्चास्मि तत्त्वतः।
ततो मां तत्त्वतो ज्ञात्वा विशते तदनन्तरम्॥ ५५॥

—अ० १८

इति **श्रीमद्ध्यानगीतायां** योगशास्त्रे श्रीकृष्णार्जुन-संवादे **भक्तियोगो** नाम दशमोऽध्यायः।

# विश्वरूपदर्शनम्

## १. रूपदर्शनोत्कण्ठा

अर्जुनाची ईश्वराचें निजरूप पाहण्याची उत्कंठा. (श्लो० २)

(ಅರ್ಜುನನಿಗೆ ಈಶ್ವರನ ನಿಜರೂಪವನ್ನು ಕಾಣುವ ಉತ್ಕಟೇಚ್ಛೆಯು.)

अर्जुन उवाच—

एवमेतद्यथात्थ त्वमात्मानं परमेश्वर।
द्रष्टुमिच्छामि ते रूपमैश्वरं पुरुषोत्तम॥ ३॥

मन्यसे यदि तच्छक्यं मया द्रष्टुमिति प्रभो।
योगेश्वर ततो मे त्वं दर्शयात्मानमव्ययम्॥ ४॥

—अ० ११

## २. दिव्यदृष्टिदानम्

दिव्य चक्षूवांचून ईश्वराचें रूप दिसणें शक्य नाहीं. (श्लो० २)

(ದಿವ್ಯಚಕ್ಷುವಿಲ್ಲದೆ ಈಶ್ವರನ ರೂಪವು ಕಾಣುವದು ಶಕ್ಯವಿಲ್ಲ.)

श्रीभगवानुवाच--

पश्य मे पार्थ रूपाणि शतशोऽथ सहस्रशः।
नानाविधानि दिव्यानि नानावर्णाकृतीनि च ॥ ५ ॥

न तु मां शक्यसे द्रष्टुमनेनैव स्वचक्षुषा।
दिव्यं ददामि ते चक्षुः पश्य मे योगमैश्वरम् ॥ ८ ॥

--अ० ११

## ३. ऐश्वररूपदर्शनम्

ईश्वराचें सर्वाश्चर्यमय तेजःपुंज विश्वरूप. (श्लो० ४)

(ಸರ್ವಾಶ್ಚರ್ಯಮಯವೂ, ತೇಜಃಪುಂಜವೂ ಆದ ಈಶ್ವರನ ವಿಶ್ವರೂಪವು.)

सञ्जय उवाच—

एवमुक्त्वा ततो राजन् महायोगेश्वरो हरिः ।
दर्शयामास पार्थाय परमं रूपमैश्वरम् ॥ ९ ॥

अनेकवक्त्रनयनमनेकाद्भुतदर्शनम् ।
अनेकदिव्याभरणं दिव्यानेकोद्यतायुधम् ॥ १० ॥

दिव्यमाल्याम्बरधरं दिव्यगन्धानुलेपनम् ।
सर्वाश्चर्यमयं देवमनन्तं विश्वतोमुखम् ॥ ११ ॥

दिवि सूर्यसहस्रस्य भवेद्युगपदुत्थिता ।
यदि भाः सदृशी सा स्याद्भासस्तस्य महात्मनः ॥ १२ ॥

—अ० ११

### ४. रौद्राद्भुतरसः

अर्जुनानें केलेलें, विश्वरूपाचें, रौद्राद्भुतरसयुक्त वर्णन. (श्लो० १०)

(ಅರ್ಜುನನು ಮಾಡಿದ, ವಿಶ್ವರೂಪದ, ರೌದ್ರಾದ್ಭುತರಸದಿಂದ ಕೂಡಿದ ವರ್ಣನೆಯು.)

अर्जुन उवाच—

पश्यामि देवांस्तव देव देहे
सर्वांस्तथा भूतविशेषसङ्घान्।
ब्रह्माणमीशं कमलासनस्थ-
मृषींश्च सर्वानुरगांश्च दिव्यान्॥ १५॥

अनेकबाहूदरवक्त्रनेत्रं
पश्यामि त्वां सर्वतोऽनन्तरूपम्।
नान्तं न मध्यं न पुनस्तवादिं
पश्यामि विश्वेश्वर विश्वरूप॥ १६॥

द्यावापृथिव्योरिदमन्तरं हि
व्याप्तं त्वयैकेन दिशश्च सर्वाः।
दृष्ट्वाद्भुतं रूपमुग्रं तवेदं
लोकत्रयं प्रव्यथितं महात्मन्॥ २०॥

नभःस्पृशं दीप्तमनेकवर्णं
व्यात्ताननं दीप्तविशालनेत्रम्।
दृष्ट्वा हि त्वां प्रव्यथितान्तरात्मा
धृतिं न विन्दामि शमं च विष्णो॥ २४॥

दंष्ट्राकरालानि च ते मुखानि
दृष्ट्वैव कालानलसन्निभानि।
दिशो न जाने न लभे च शर्म
प्रसीद देवेश जगन्निवास॥ २५॥

अमी च त्वां धृतराष्ट्रस्य पुत्राः
सर्वे सहैवावनिपालसङ्घैः।
भीष्मो द्रोणः सूतपुत्रस्तथासौ
सहास्मदीयैरपि योधमुख्यैः॥ २६॥

वक्त्राणि ते त्वरमाणा विशन्ति
दंष्ट्राकरालानि भयानकानि।
केचिद्विलग्ना दशनान्तरेषु
संदृश्यन्ते चूर्णितैरुत्तमाङ्गैः॥ २७॥

यथा प्रदीप्तं ज्वलनं पतङ्गा
विशन्ति नाशाय समृद्धवेगाः।
तथैव नाशाय विशन्ति लोका-
स्तवापि वक्त्राणि समृद्धवेगाः॥ २९॥

लेलिह्यसे ग्रसमानः समन्ता-
ल्लोकान्समग्रान्वदनैर्ज्वलद्भिः।
तेजोभिरापूर्य जगत्समग्रं
भासस्तवोग्राः प्रतपन्ति विष्णो॥ ३०॥

आख्याहि मे को भवानुग्ररूपो
नमोऽस्तु ते देववर प्रसीद।
विज्ञातुमिच्छामि भवन्तमाद्यं
न हि प्रजानामि तव प्रवृत्तिम्॥ ३१॥

—अ० ११

## ५. पूर्वनिर्हृतिः

ईश्वर सर्वकर्ता असून, त्यानें शत्रुवीर अगोदरच मारलेले आहेत. (श्लो० ३)

(ಸರ್ವಕರ್ತನಾದ ಈಶ್ವರನು ಶತ್ರುವೀರರನ್ನು ಮುಂಚಿತವಾಗಿಯೇ ಕೊಂದಿರುವನು.)

श्रीभगवानुवाच—

कालोऽस्मि लोकक्षयकृत्प्रवृद्धो

लोकान् समाहर्तुमिह प्रवृत्तः।

ऋतेऽपि त्वां न भविष्यन्ति सर्वे

येऽवस्थिताः प्रत्यनीकेषु योधाः॥ ३२॥

तस्मात्त्वमुत्तिष्ठ यशो लभस्व

जित्वा शत्रून् भुङ्क्ष्व राज्यं समृद्धम्।

मयैवैते निहताः पूर्वमेव

निमित्तमात्रं भव सव्यसाचिन्॥ ३३॥

द्रोणं च भीष्मं च जयद्रथं च

कर्णं तथान्यानपि योधवीरान्।

मया हतांस्त्वं जहि मा व्यथिष्ठा

युध्यस्व जेतासि रणे सपत्नान्॥ ३४॥

—अ० ११

## ६. हर्षभयसम्मिश्रणम्

अर्जुनाचे अंतःकरणांत हर्षभयांचें संमिश्रण. (श्लो० १)

(ಅರ್ಜುನನ ಅಂತಃಕರಣದಲ್ಲಿ ಹರ್ಷಭಯಗಳ ಸಮ್ಮಿಶ್ರಣವು.)

अर्जुन उवाच—

अदृष्टपूर्वं हृषितोऽस्मि दृष्ट्वा
भयेन च प्रव्यथितं मनो मे।
तदेव मे दर्शय देव रूपं
प्रसीद देवेश जगन्निवास ॥ ४५ ॥

—अ० ११

## ७. विश्वरूपप्रवेशः

केवळ अनन्यभक्तीनेंच अर्जुनसदृश भक्त विश्वरूपांत प्रवेश करूं शकतो. (श्लो० ४)

(ಕೇವಲ ಅನನ್ಯಭಕ್ತಿಯಿಂದಲೇ ಅರ್ಜುನನಂಥ ಭಕ್ತನು ವಿಶ್ವರೂಪದಲ್ಲಿ ಪ್ರವೇಶಿಸಬಲ್ಲನು.)

श्रीभगवानुवाच—

मया प्रसन्नेन तवार्जुनेदं
रूपं परं दर्शितमात्मयोगात्।

तेजोमयं विश्वमनन्तमाद्यं
यन्मे त्वदन्येन न दृष्टपूर्वम् ॥ ४७ ॥

न वेदयज्ञाध्ययनैर्न दानै-
र्न च क्रियाभिर्न तपोभिरुग्रैः।
एवंरूपः शक्य अहं नृलोके
द्रष्टुं त्वदन्येन कुरुप्रवीर ॥ ४८ ॥

नाहं वेदैर्न तपसा न दानेन न चेज्यया।
शक्य एवंविधो द्रष्टुं दृष्टवानसि मां यथा ॥ ५३ ॥

भक्त्या त्वनन्यया शक्य अहमेवंविधोऽर्जुन।
ज्ञातुं द्रष्टुं च तत्त्वेन प्रवेष्टुं च परन्तप ॥ ५४ ॥

—अ० ११

इति **श्रीमद्ध्यानगीतायां** योगशास्त्रे श्रीकृष्णार्जुन-संवादे **विश्वरूपदर्शनं** नामैकादशोऽध्यायः।

द्वादशोऽध्यायः

# भगवदाश्वासनम्

## १. सर्वदुर्गसन्तरणम्

तूं माझें ठिकाणीं अचल चित्त ठेवशील, तर तूं माझ्या प्रसादानें सर्वसंकटांतून पारपडशील. (श्लो० २)

(ನೀನು ನನ್ನಲ್ಲಿ ಅಚಲಚಿತ್ತವನ್ನಿರಿಸಿದರೆ ನನ್ನ ಪ್ರಸಾದದಿಂದ ಎಲ್ಲ ಸಂಕಟಗಳಿಂದ ಪಾರಾಗುವಿ.)

श्रीभगवानुवाच—

चेतसा सर्वकर्माणि मयि संन्यस्य मत्परः।
बुद्धियोगमुपाश्रित्य मच्चित्तः सततं भव॥५७॥

मच्चित्तः सर्वदुर्गाणि मत्प्रसादात्तरिष्यसि।
अथ चेत्त्वमहङ्कारान्न श्रोष्यसि विनङ्क्ष्यसि॥५८॥

—अ० १८

## २. प्रकृतेर्नियोजनम्

प्रकृति, तुझ्यावर आरूढ होऊन, तुझी इच्छा नसतांनाहि तुजकडून कर्मे करवीलच. (श्लो० २)

(ಪ್ರಕೃತಿಯು, ನಿನ್ನ ಮೇಲೆ ಕುಳಿತುಕೊಂಡು, ನಿನ್ನ ಇಚ್ಛೆ ಇಲ್ಲದಿದ್ದರೂ ನಿನ್ನಿಂದ ಕರ್ಮಗಳನ್ನು ಮಾಡಿಸಿಯೇ ತೀರುವದು.)

यदहङ्कारमाश्रित्य न योत्स्य इति मन्यसे।
मिथ्यैष व्यवसायस्ते प्रकृतिस्त्वां नियोक्ष्यति॥ ५९॥

स्वभावजेन कौन्तेय निवद्धः स्वेन कर्मणा।
कर्तुं नेच्छसि यन्मोहात्करिष्यस्यवशोऽपि तत्॥ ६०॥

—अ० १८

## ३. ईश्वरस्य मायाचक्रसम्भ्रमणम्

सर्व भूतांमध्यें राहून, त्यांस आपल्या मायाशक्तीनें भ्रमविणाऱ्या ईश्वरास तूं सर्वभावानें शरण ज़ा. (श्लो० २)

(ಎಲ್ಲ ಭೂತಗಳಲ್ಲಿ ನೆಲಸಿ, ಅವುಗಳನ್ನು ತನ್ನ ಮಾಯಾಶಕ್ತಿಯಿಂದ ಭ್ರಮಿಸುವಂತೆ ಮಾಡುವ ಈಶ್ವರನಿಗೆ ನೀನು ಸರ್ವಭಾವದಿಂದ ಶರಣು ಹೋಗು.)

ईश्वरः सर्वभूतानां हृद्देशेऽर्जुन तिष्ठति।
भ्रामयन्सर्वभूतानि यन्त्रारूढानि मायया ॥ ६१ ॥

तमेव शरणं गच्छ सर्वभावेन भारत।
तत्प्रसादात्परां शान्तिं स्थानं प्राप्स्यसि शाश्वतम् ॥ ६२ ॥

—अ० १८

### ४. शरणागतिः

सर्व धर्मांचा त्याग करून तूं एकभावानें मला शरण येशील, तर मी तुला सर्व पापांपासून मुक्त करीन. (श्लो० २)

(ಸರ್ವ ಧರ್ಮಗಳನ್ನು ತ್ಯಜಿಸಿ ನೀನು ಏಕಭಾವದಿಂದ ನನಗೆ ಶರಣು ಬಂದರೆ ನಾನು ನಿನ್ನನ್ನು ಎಲ್ಲ ಪಾಪಗಳಿಂದ ಮುಕ್ತನನ್ನಾಗಿ ಮಾಡುವೆನು.)

मन्मना भव मद्भक्तो मद्याजी मां नमस्कुरु।
मामेवैष्यसि सत्यं ते प्रतिजाने प्रियोऽसि मे ॥ ६५॥

सर्वधर्मान् परित्यज्य मामेकं शरणं व्रज।
अहं त्वा सर्वपापेभ्यो मोक्षयिष्यामि मा शुचः ॥ ६६।

—अ० १८

## ५. परमगुह्याभिधानभक्तिः

हें परमगुह्य तूं माझ्या भक्तांस सांगशील, तर तुझ्या इतका प्रियकृत्तम मागें झाला नाहीं, पुढें होणार नाहीं. (श्लो० २)

(ಈ ಪರಮಗುಹ್ಯವನ್ನು ನೀನು ನನ್ನ ಭಕ್ತರಿಗೆ ತಿಳಿಸಿದರೆ ನಿನ್ನಂಥ ಪ್ರಿಯಕೃತ್ತಮನು ಹಿಂದೆ ಆಗಿಲ್ಲ, ಮುಂದೆ ಆಗುವದಿಲ್ಲ.)

य इदं परमं गुह्यं मद्भक्तेष्वभिधास्यति।
भक्तिं मयि परां कृत्वा मामेवैष्यत्यसंशयः ॥ ६८॥

न च तस्मान्मनुष्येषु कश्चिन्मे प्रियकृत्तमः।
भविता न च मे तस्मादन्यः प्रियतरो भुवि ॥ ६९॥

—अ० १८

## ६. अर्जुनाभिवचनम्

श्रीकृष्णाच्या उपदेशाप्रमाणें वागण्याचें अर्जुनानें दिलेलें अभिवचन. (श्लो० २)

(ಶ್ರೀಕೃಷ್ಣನ ಉಪದೇಶದಂತೆ ನಡೆಯಲು ಅರ್ಜುನನು ಕೊಟ್ಟ ಅಭಿವಚನವು.)

कच्चिदेतच्छ्रुतं पार्थ त्वयैकाग्रेण चेतसा।
कच्चिदज्ञानसम्मोहः प्रनष्टस्ते धनञ्जय॥ ७२॥

अर्जुन उवाच—

नष्टो मोहः स्मृतिर्लब्धा त्वत्प्रसादान्मयाच्युत।
स्थितोऽस्मि गतसन्देहः करिष्ये वचनं तव॥ ७३॥

—अ० १८

## ७. रोमहर्षणसंवादः

हा रोमहर्षण संवाद ऐकून व हें देवाचें अत्यद्भुत रूप पाहून, कोण विस्मयानें व हर्षानें भरून जाणार नाहीं? (श्लो० ३)

(ಈ ರೋಮಾಂಚಕಾರಕ ಸಂವಾದವನ್ನು ಕೇಳಿ ಹಾಗೂ ದೇವನ ಈ ಅತ್ಯದ್ಭುತ ರೂಪವನ್ನು ಕಂಡು, ಯಾವನು ವಿಸ್ಮಯ ಹರ್ಷಗಳಿಂದ ತುಂಬಿ ತುಳುಕಲಾರನು?)

सञ्जय उवाच—

इत्यहं वासुदेवस्य पार्थस्य च महात्मनः ।
संवादमिममश्रौषमद्भुतं रोमहर्षणम् ॥ ७४ ॥

राजन् संस्मृत्य संस्मृत्य संवादमिममद्भुतम् ।
केशवार्जुनयोः पुण्यं हृष्यामि च मुहुर्मुहुः ॥ ७६ ॥

तच्च संस्मृत्य संस्मृत्य रूपमत्यद्भुतं हरेः ।
विस्मयो मे महान् राजन् हृष्यामि च पुनः पुनः ॥ ७७ ॥

—अ० १८

## ८. विजयवैभवप्राप्तिः

जेथें योगेश्वर कृष्ण व धनुर्धर पार्थ आहेत, तेथें विजय व वैभव ठेवलेलींच आहेत. (श्लो० १)

(ಯೋಗೇಶ್ವರನಾದ ಕೃಷ್ಣನು ಹಾಗೂ ಧನುರ್ಧರನಾದ ಪಾರ್ಥನು ಇರುವಲ್ಲಿ ವಿಜಯುವೈಭವಗಳು ಕಟ್ಟಿಟ್ಟಂಥವುಗಳೇ.)

यत्र योगेश्वरः कृष्णो यत्र पार्थो धनुर्धरः।
तत्र श्रीर्विजयो भूतिर्ध्रुवा नीतिर्मतिर्मम ॥ ७८ ॥

—अ० १८

इति **श्रीमद्ध्यानगीतायां** योगशास्त्रे श्रीकृष्णार्जुनसंवादे **भगवदाश्वासनं** नाम द्वादशोऽध्यायः।

# श्लोकसूची

